# श्रीश्रीकृष्णचैतन्यचरितामृतम्

# The Immortal Acts of Śrī Caitanya

According to Murāri

श्रीमन्मुरारिगुप्तप्रणीतम्

Version .1

May 7, 2003

# Contents

# Chapter 1

## प्रथमः सर्गः

स जयति शुद्धविक्रमः कनकाभः कमलायतेक्षणः ।
वरजानुविलम्बिसङ्भुजो बहुधा भक्तिरसाभिनर्तकः ॥१ ॥

स जगन्नाथसुतो जगत्पतिर्जगदादिर्जगदार्तिहा विभुः ।
कलिपापकलिभारहारकोऽजनि शच्यां निजभक्तिमुद्वहन् ॥२ ॥

स नवद्वीपवतीषु भूमिषु द्विजवर्यैरभिनन्दितो हरिः ।
निजपित्रोः सुखदो गृहे सुखं निवसन् वेदषडङ्गसंहिताम् ॥३ ॥

निपपाठ गुरोर्गृहे वसन् परिचर्याभिरतः शुचिव्रतः ।
स च विश्वम्भरसंज्ञको हरिर्युगधर्माचरणाय धर्मिणाम् ॥४ ॥

हरिकीर्तनमादिशत् स्मरन् पुरुषार्थाय हरेरतिप्रियम् ।
स गयासु पितृक्रियां चरन् हरिपादाङ्कितभूमिषु स्वयम् ॥५ ॥

निजसंस्मृतिमात्रसम्पदः पुलकप्रेमजडो बभूव ह ।
स तदा निजमेव मन्दिरं समगादाशरीरया गिरा ॥६ ॥

भक्तवर्गमुखवेष्टितः प्रभुः प्रेमपाकपरिपूर्णविग्रहः ।
हरिकीर्तनसत्कथासुखं मुमुदे दानवसिंहमर्दनः ॥७ ॥

अथास्य कीर्तिं श्रवणामृतां सतामुदारकीर्तेः श्रुतिभिः पिपासुभिः ।
विगाहितुं श्रीयुतसत्कथां शुभामुवाह हर्षाश्रुविलोललोचनः ॥८ ॥

भक्तः श्रीवासनामा द्विजकुलकमलप्रोल्लसच्चित्रभानुः
प्राहेदं श्रीमुरारि त्वमिह वद हरेर्श्रीचरित्रं नवीनम् ।
तस्याज्ञामाकलय्य प्रकटकरपुटैस्तं नमस्कृत्य भूयः
श्रीमच्चैतन्यमूर्तेः कलिकलुषहरां कीर्तिमाह स्वयम् सः ॥ ९ ॥

अथ स चिन्तयामास वैद्यसूनुर्मुरारिकः ।
कथं वक्ष्यामि बह्वर्थां चैतन्यस्य कथां शुभाम् ॥ १० ॥

यद्वक्तुं नैव शक्नोति वाचस्पतिरपि स्वयम् ।
तथापि वैष्णवादेशं कर्तुं युक्तं मतिर्मम ॥ ११ ॥

निमला भाति सततं कृष्णस्मरणसम्पदा ।
वैष्णवाज्ञा हि फलदा भविष्यति न चान्यथा ॥ १२ ॥

इत्युक्त्वा वक्तुमारेभे भगवद्भक्तिबृंहिताम् ।
कथां धर्मार्थकामाय मोक्षाय विष्णुभक्तये ॥ १३ ॥

नमामि चैतन्यमजं पुरातनं
चतुर्भुजं शङ्खगदाब्जचक्रिणम् ।
श्रीवत्सलक्ष्माङ्कितवक्षसं हरिं
सद्मालसंलग्नमणिं सुवाससम् ॥ १४ ॥

वदामि किंचिद्भगवत्कथां सतां
हर्षाय किंचित्स्खलनं यदा भवेत् ।
तदात्र संशोधयितुं महत्तमाः
प्रमाणमेवात्र परोपकारिणः ॥ १५ ॥

नवद्वीप इतिख्याते क्षेत्रे परमवैष्णवे ।
ब्राह्मणाः साधवः शान्ताः वैष्णवाः सत्कुलोद्भवाः ॥ १६ ॥

महान्तः कर्मनिपुणाः सर्वे शास्त्रार्थपारगाः ।
अन्ये च सन्ति बहुशो भिषक्शूद्रवणिग्जनाः ॥ १७ ॥

स्वाचारनिरताः शुद्धाः सर्वे विद्योपजीविनः ।
तत्र देवव्रताः सर्वे वैकुण्ठभवनोपमे ॥ १८ ॥

श्रीवासो यत्र रेजे हरिपदकमलप्रोल्लसन्मत्तभृङ्गः
प्रेमार्द्रोत्तुङ्गबाहुः परमरसमदैर्गायतीशं सदोत्कः ।
गोपीनाथो द्विजाग्र्यः श्रवणपथगते नाम्नि कृष्णस्य मत्तो
ऽत्युच्चै रौति स्म भूयो लयतरलकरो नृत्यति स्मातिवेलम् ॥१९ ॥

बालोद्यद्भास्कराभो बुधजनकमलोद्बोधने दक्षमूर्तिः
कारुण्याब्धिहिमांशोरिव जनहृदयोत्तापशान्त्यैकमूर्तिः ।
प्रेमध्यानातिदक्षो नटविधिकलासद्गुणाढ्यो महात्मा
श्रीयुक्ताद्वैतवर्यः परमरसकलाचार्य ईशो विरेजे ॥२० ॥

यत्र सर्वगुणवानतिरेजे चन्द्रशेखरगुरुर्द्विजराजः ।
कृष्णनामकर्षिताङ्गरुहः स प्रस्खलन्नयनवारिभिरार्द्रः ॥२१ ॥

यत्र नृत्यति मुनौ हरिदासे दासवत्सलतया जगदीशः ।
खेचरैः सुरगणैः समहेशैर्लास्यमाशु परिपश्यति हृष्टः ॥२२ ॥

यत्र विष्णुपदसम्भवा सरिद्वेगवत्यतितरा करुणार्द्रा ।
स्पर्द्धया रविसुता सरयूणां या दधार कनकोज्ज्वलं हरिम् ॥२३ ॥

जगन्नाथस्तस्मिन् द्विजकुलपयोधीन्दुसदृशो
ऽभवद्वेदाचार्यः सकलगुणयुक्तो गुरुसमः ।
स कृष्णाङ्घ्रिध्यानप्रबलतरयोगेन मनसा
विशुद्धः प्रेमार्द्रो नवशशिकलेवाशु ववृधे ॥२४ ॥

इतिश्रीचैतन्यचरिते महाकाव्ये प्रथमप्रक्रमे अवतारानुक्रमः प्रथमसर्गः ।

# Chapter 2

# द्वितीयः सर्गः

अथ तस्य गुरुश्चक्रे सर्वशास्त्रार्थवेदिनः ।
पदवीमिति तत्त्वज्ञः श्रीमन्मिश्रपुरन्दरः ॥ १ ॥

तमेकदा सत्कुलीनं पण्डितं धर्मिणाम्बरम् ।
श्रीमन्नीलाम्बरो नाम चक्रवर्ती महामनाः ॥ २ ॥

समाहूयाददत् कन्यां शचीं स कुलकृत्शदः ।
तां प्राप्य सोऽपि ववृधे शचीमिव पुरन्दरः ॥ ३ ॥

ततो गेहे निवसतस्तस्य धर्मो व्यवर्धत ।
आतिथ्यैः शान्तिकैः शौचैर्नित्यकाम्यक्रियाफलैः ॥ ४ ॥

तत्र कालेन कियता तस्याष्टौ कन्यकाः शुभाः ।
बभूवुः क्रमशो दैवात्ताः पञ्चत्वं गताः शची ॥ ५ ॥

वात्सल्यदुःखतप्तेन जगाम मनसा पतिम् ।
पुत्रार्थं शरणं श्रीमान् पितृयज्ञं चकार सः ॥ ६ ॥

कालेन कियता लेभे पुत्रं सुरसुतोपमम् ।
मुदमाप जगन्नाथो निधिं प्राप्य यथाऽधनः ॥ ७ ॥

नाम तस्य पिता चक्रे श्रीमतो विश्वरूपकः ।
पठता तेन कालेन स्वल्पेनैव महात्मना ॥ ८ ॥

वेदांश्च न्यायशास्त्रञ्च ज्ञातः सद्योग उत्तमः ।
स सर्वज्ञः सुधीः शान्तः सर्वेषामुपकारकः ॥ ९ ॥

हरेर्ध्यानपरो नित्यं विषये नाकरोन्मनः ।
श्रीमद्भागवतरसास्वादमत्तो निरन्तरम् ॥ १० ॥

तस्यानुजो जगद्योनिरजो यज्ञे स्वयं प्रभुः ।
इन्द्रानुजो यथोपेन्द्रः कश्यपाददितेः सुतः ॥ ११ ॥

हरिकीर्तनपरां कृत्वा च त्रिजगतीं स्वयम् ।
उषित्वा क्षेत्रप्रवरे पुरुषोत्तमसंज्ञके ॥ १२ ॥

कृत्वा भक्तिं हरौ शिक्षां कारयित्वा जनस्य सः ।
श्रीवृन्दावनमाधुर्यमास्वाद्यास्वादयन् जनान् ॥ १३ ॥

तारयित्वा जगत् कृत्स्नं वैकुण्ठस्थैः प्रसादितः ।
जगाम निलयं हृष्टो निजमेव महर्द्धिमत् ॥ १४ ॥

एतच्छ्रुत्वाद्भुतं प्राह ब्रह्मचारी जितेन्द्रियः ।
श्रीचैतन्यकथामत्तः श्रीदामोदरपण्डितः ॥ १५ ॥

कथयस्व कथां दिव्यामद्भुतां लोकपावनीम् ।
यां श्रुत्वा मुच्यते लोकः संसाराद्घोरकिल्विषात् ॥ १६ ॥

श्रीकृष्णचरणाम्भोजे परमाः प्रेमसम्पदः ।
जायन्ते सर्वलोकस्य तद्वदस्व हरेः कथाम् ॥ १७ ॥

कस्य हेतोः पृथव्यां स जातः सर्वेश्वरो विभुः ।
कृतं किमिह तेनैव जगतामीश्वरेण च ॥ १८ ॥

वक्तुमर्हसि भद्राणि कर्माणि मङ्गलानि च ।
जगतां तापशान्त्यर्थं प्रेमार्थं सुमहात्मनाम् ॥ १९ ॥

तच्छ्रुत्वा वचनं तस्य पण्डितस्य महात्मनः ।
उवाच वचनं प्रीतो मुरारिः श्रूयतामिति ॥ २० ॥

साधु ते कथयिष्यामि यथाशक्त्या द्विजोत्तम ।
संक्षेपाद्विस्तरान्नालं वक्तुं शक्नोति भार्गवः ॥ २१ ॥

अथ नारदो धर्मात्मा वर्षे भारतसंज्ञके ।
वैष्णवाग्र्यो महातेजाः पूर्णचन्द्रसमप्रभः ॥ २२ ॥

कैलशशिखराकारो मेखलावरभूषणः ।
ऐणचर्मधरो विष्णोरंशः सर्वजनप्रियः ॥ २३ ॥

सर्वेषामुपकाराय बभ्रामाकाशमण्डले ।
महतीं रणयन् प्रीतो हरिनामप्रगायतीं ॥ २४ ॥

द्रक्ष्यामि वैष्णवं कुत्र तत्र वत्स्यामि साम्प्रतम् ।
इतिसञ्चिन्त्य मनसा ददर्श पृथवीमिमाम् ॥ २५ ॥

कलिना पापमित्रेण प्रथितमलपङ्किलाम् ।
गामेव म्लेच्छहस्तस्थां प्रचण्डकरशोषिताम् ॥ २६ ॥

जनांश्च ददृशे तत्र पापव्याधिसमाकुलान् ।
परापवादनिरतान् शठान् ह्रस्वायुषः कृशान् ॥ २७ ॥

राज्ञश्च पापनिपुणान् शूद्रान् सयवनान् खलान् ।
म्लेच्छान् विकर्मनिरतान् प्रजासर्वस्वहारकान् ॥ २८ ॥

शास्त्रज्ञानपि साधूनां निन्दकान् आत्ममानिनः ।
एतान् बहुविधान् दृष्ट्वा चिन्तयामास नारदः ॥ २९ ॥

इतिश्रीकृष्णचैतन्यचरिते महाकाव्ये प्रथमप्रक्रमे श्रीनारदानुतापो नाम द्वितीयः सर्गः

# Chapter 3

# तृतीयः सर्गः

कलेः प्रथमसन्ध्यायां निमग्नेयं वसुन्धरा ।
सर्वेषां पापदग्धानां हरिनामरसायनः ॥ १ ॥

तारकोऽयं भवत्येव वैष्णवद्वेषिणं विना ।
आत्मसम्भाविता ये च ये च वैष्णवनिन्दकाः ॥ २ ॥

ये कृष्णनाम्नि देहेषु निन्दयुर्मन्दबुद्धयः ।
तेऽनित्या इति वक्ष्यन्ते तेषां निरय एव हि ॥ ३ ॥

अत्र किं स्यादुपायोऽयमिति निश्चित्य शुद्धधीः ।
वैकुण्ठाख्यं परं धाम जगाम करुणानिधिः ॥ ४ ॥

अथ त्रिवेदीपरिगीयमानं ददर्श वैकुण्ठमखण्डधिष्ण्यम् ।
स्वतेजसा ध्वस्तरजःसमूहं दिशां दशामाप गुणात् परां मुनिः ॥ ५ ॥

मधुव्रतानां निवहैर्हरेर्यशः प्रगीयमानं कमलावलीम् ।
विराजितं रत्नतटाभिरामवापीभिरामुक्तलतासुगन्धिभिः ॥ ६ ॥

माणिक्यगेहैर्वडभीभिरन्वितं गजेन्द्रमुक्तावलिभूषिताभिः ।
सार्वर्त्तवैः शाखिभिरन्वितं खगैर्विकूजितं चन्द्रशिलापथाढ्यम् ॥ ७ ॥

तत्र श्रिया जुष्टमजं पुरातनं लसत्किरीटद्युतिरञ्जितालकम् ।
विकाशिदिव्याब्जजितेक्षणं लसत्सुधाकराराधितसन्मुखोल्लसम् ॥ ८ ॥

लसन्महाकुण्डलगण्डशोभितं सुकम्बुकण्ठं कनकोज्ज्वलांशुकम् ।
कृष्णं चतुर्भिः परिघोपमैर्भुजैर्नीलाद्रिशृङ्गं सुरपादपैरिव ॥ ९ ॥

विराजमानं कनकाङ्गदादिभिर्मुक्तावलीभिर्वरहेमसूत्रैः ।
सकिङ्किणीजालनिबद्धचेलोल्लसन्नितम्बं वरपादपङ्कजम् ॥ १० ॥

तदीयपादाब्जमनोज्ञगन्धमाघ्राय हर्षाश्रुतनूरुहोद्गमैः ।
विसंज्ञ एवाशु पपात भुमौ स दण्डवत् कृष्णसमीपतो मुनिः ॥ ११ ॥

ततः प्रसार्याशु करं कृतज्ञो रत्नाङ्गुरीभिन्ननखप्रभं प्रभुः ।
मुदा स्पृशन्मूर्द्धनि मुनेर्मनोहरं बभाष ईषत्स्मितशोभिताननः ॥ १२ ॥

स्वायम्भुवोत्तिष्ठ मुने महात्मन् यन्नो वदस्यद्य करोमि तत्ते ।
ममैव कालोऽयमुपागतः स्वयं युगेषु धर्माचरणाय धर्मिणां ॥ १३ ॥

ततः समुत्थाप्य महर्षिसत्तमं महत्तमैकान्तपरायणो हरिः ।
समादिदेशासनमाशु तस्मै तस्मिन्निविष्टो मुनिराज्ञया हरेः ॥ १४ ॥

अथान्वपृच्छद्भगवान् मुने कथं संप्राप्तवान् मामिह किं तवेप्सितम् ।
पूर्णस्य कार्यं करवाणि साधो परोपकाराय महद्विचेष्टितम् ॥ १५ ॥

इत्थं सतोयाम्बुदतुल्यघोषं वचोऽमृतं कृष्णदयामृताब्धेः ।
उवाच पूर्णस्मितवीक्षया हरेर्नमामि लोकान् परिपाहि दुःखितान् ॥ १६ ॥

क्षितिः क्षिणोत्यद्य समाकुला विभो जनस्य पापौघयुतस्य धारणात् ।
जनाश्च सर्वे कलिकाल्दष्टाः पापे रतास्त्यक्तभवत्प्रसङ्गाः ॥ १७ ॥

तान् पाहि नाथ त्वदृते न तेषामन्योऽस्ति पाता निरतात्तु सद्गतिं ।
एवं विचार्य कुरु सर्वलोकनाथ स्वयं सद्गतिरीश नानयः ॥ १८ ॥

इत्थं समाकर्ण्य मुनेर्वचो हरिर्विदन्नपि प्राह किमाचरिष्ये ।
केनाप्युपायेन भवेद्धि शान्तिस्तद्ब्रूहि तं प्राह पुनः स्वभूसुतः ॥ १९ ।

स्वयं सुशीतः शतचन्द्रमा यथा भूदेववंशेऽप्यवतीर्य सत्कुले ।
वात्स्ये जगन्नाथसुतेति विश्रुतिं समाप्नुहि स्वं कुरु शं धरण्याः ॥ २० ॥

रामादिरूपैर्भगवन् कृतं हि यत् पापात्मनां राक्षसदानवानाम् ।
वधादिकं कर्म न चेह कार्यं मनो नराणां परिशोधयस्व ॥ २१ ॥

तानासुरं भावमुपागतान् हि यदा हनिष्ये क्क तदास्ति लोकः ।
एवं व्यवस्य स्वधियात्मनो यशः प्रख्याहि लोकाः सुखिनो भवन्तु ॥ २२ ॥

तत्रैव रुद्रेण मुनिप्रवीराः कर्तुं हि साहाय्यमवातरिष्यन् ।
तथेति तं प्राह हरिः सुरर्षिं सोऽपि प्रणम्याशु जगाम हृष्टः ॥ २३ ॥

इति श्रीकृष्णचैतन्यचरिते महाकाव्ये प्रथमप्रक्रमे नारदप्रश्नो नाम तृतीयः सर्गः ॥

# Chapter 4

# चतुर्थसर्गः

अथ श्रुत्वा तु तत्सर्वं श्रीदामोदरपण्डितः ।
उवाच परमप्रीतः कथ्यतां नृहरेः कथाम् ॥ १ ॥

के के तत्रावतारेषु स्ववतीर्णा महीतले ।
अवताराश्च कतिधा तान्वदस्वानुपूर्वशः ॥ २ ॥

इति श्रुत्वा द्विजाग्र्यस्य वचनं श्रीमुरारिकः ॥
उवाच परमप्रीत्या श्रूयतामिति सादरम् ॥ ३ ॥

अथ ते कथयाम्यन्यत्स्वांशावतरणं हरेः ॥
शुद्धभक्ततया ख्यातान् भक्तानीश्वररूपिणः ॥ ४ ॥

आदौ जातो द्विजश्रेष्ठः श्रीमाधवपुरी प्रभुः ।
ईश्वरांशो द्विधा भूत्वाऽद्वैताचार्यश्च सद्गुणः ॥ ५ ॥

तयोः शिष्योऽभवद्देवश्चन्द्रांशुश्चन्द्रशेखरः ।
स आचार्यरत्न इति ख्यातो भुवि महायशाः ॥ ६ ॥

श्रीनारदांशजातोऽसौ श्रीमच्छ्रीवासपन्दितः ।
गन्धर्वांशोऽभवद्वैद्यः श्रीमुकुन्दः सुगायनः ॥ ७ ॥

श्रीमच्छ्रीहरिदासोऽभून्मुनेरंशः शृणुस्व तत् ।
कथितं नागदष्टेन ब्राह्मणेन यथा पुरा ॥ ८ ॥

आदौ मुनिवरः श्रीमान् रामो नाम महातपाः ।
द्राविडे वैष्णवक्षेत्रे सोऽवात्सीत् पुत्रवत्सलः ॥ ९ ॥

तस्य पुत्रेण तुलसीं प्रक्षाल्य भाजने शुभे ।
स्थापिता साऽपतद्भूमावप्रक्षाल्य पुनश्च ताम् ॥ १० ॥

पित्रेऽददात्पुनः सोऽपि श्रीरामाख्यो महामुनिः ।
ददौ भगवते तेन जातोऽसौ यवने कुले ॥ ११ ॥

स धर्मात्मा सुधीः शान्तः सर्वज्ञानविचक्षणः ।
ब्रह्मांशोऽपि ततः श्रीमान् भक्त एव सुनिश्चितः ॥ १२ ॥

अवधूतो महातेजा नित्यानन्दो महत्तमः ।
बलदेवांशतो जातो महायोगी स्वयं प्रभुः ॥ १३ ॥

न तस्य कुलशीलानि कर्माणि वक्तुमुत्सहे ।
अपि वर्षशतेनापि बृहस्पतिरपि स्वयम् ॥ १४ ॥

वक्तुं नेशेऽपरे किंवा वयं हि क्षुद्रजन्तवः ।
श्रीकृष्णद्वितीयश्चापि गौराङ्गप्राणवल्लभः ॥ १५ ॥

अन्ये च शतधा जाता देवाश्च मुनिपुङ्गवाः ।
पृथिव्यामंशभावेन तान्न सङ्ख्यातुमुत्सहे ॥ १६ ॥

अथावतारो द्विविधः पुरुषस्य प्रकीर्तितः ।
युगावतारः प्रथमः कार्यार्थेऽपरसम्भवः ॥ १७ ॥

युगावताराः कथ्यन्ते ये भवन्ति युगे युगे ।
धर्मं संस्थापयन्ति ये ताञ् शृणुष्व यथाक्रमम् ॥ १८ ॥

सत्ये युगे ध्यान एकः पुरुषस्यार्थसाधकः ।
तदर्थेऽवतरत् शुक्लश्चतुर्बाहुर्जटाधरः ॥ १९ ॥

सहस्रचन्द्रसदृशः सदा ध्यानरतो मौनिः ।
सर्वेषामेव जन्तूनां ध्यानाचार्यो बभूव ह ॥ २० ॥

त्रेतायां यज्ञ एवैको धर्मः सर्वार्थसाधकः ।
तत्र यज्ञः स्वयं जातः स्रक्स्रुवादिसमन्वितः ॥ २१ ॥

याज्ञिकैर्ब्राह्मणैः सार्द्धं यज्ञभुक् स जनार्दनः ।
यज्ञमेवाकरोज्जिष्णुर्जनान् सर्वानशिक्षयत् ॥ २२ ॥

द्वापरे तु युगे पूजा पुरुषस्यार्थाय कल्पते ।
इति ज्ञात्वा स्वयं विष्णुः पृथुरूपो बभूव ह ॥ २३ ॥

पूजाञ्चकार धर्मात्मा लोकानाञ्चानुशासनम् ।
कारयामास पूजायां सर्वेषामभवन्मनः ॥ २४ ॥

कलौ तु कीर्तनं श्रेयो धर्मः सर्वोपकारकः ।
सर्वशक्तिमयः साक्षात्परमानन्ददायकः ॥ २५ ॥

इति निश्चित्य मनसा साधूनां सुखमावहन् ।
जातः स्वयं पृथिव्यान्तु श्रीचैतन्यो महाप्रभुः ॥ २६ ॥

कीर्तनं कारयामास स्वयं चक्रे मुदान्वितः ।
युगावतारा एते वै कार्यार्थे चापराञ् शृणु ॥ २७ ॥

मात्स्ये तु वेदोद्धरणं कौर्मे मन्दारधारणं ।
वाराहे धारणं भूमेर्नारसिंहे विदारणम् ॥ २८ ॥

चक्रे दनुजशक्रस्य वामने भुवनश्रियं ।
जिग्ये तु भार्गवः क्षौणीं जित्वा राज्ञः सुदुर्मदान् ॥ २९ ॥

ददौ गां ब्राह्मणायैव विष्णुर्लोकैकतारणः ।
श्रीरामे रावणं हत्वा यशसा पूरितं जगत् ॥ ३० ॥

श्रीमत्कृष्णावतारे तु भूमेर्भारावतारणं ।
स्वयमेव हरिस्तत्र सर्वशक्तिसमन्वितः ॥ ३१ ॥

बौद्धे तु मोहनं चक्रे वेदानां भगवान्परः ।
म्लेच्छानां निधनञ्चैव कल्किरूपेण सोऽकरोत् ॥ ३२ ॥

एवंविधान्यनेकानि कर्माणि बहुरूपिणः ।
कार्यावतारा नृहरेः कथिताः परमर्षिभिः ॥ ३३ ॥

इति श्रीकृष्णचैतन्यचरिते महाकाव्ये प्रथमप्रक्रमेऽवतारानुकरणं नाम चतुर्थः सर्गः ॥

# Chapter 5

## पञ्चमः सर्गः

शृणुष्वावहितं ब्रह्मन् चैतन्यस्यावतारकम् ।
नवीनं जगदीशस्य करुणावारिधेर्विभोः ॥ १ ॥

गते देवर्षिवर्ये तु स्वाश्रमे भगवान् परः ।
जगन्नाथस्य विप्रर्षेर्मनस्याविशदच्युतः ॥ २ ॥

तेनाहितं महत्तेजो दधार समये सती ।
एतस्मिन्नन्तरे साध्वी शची पतिपरायणा ॥ ३ ॥

लेभे गर्भं हरेरंशं गङ्गेव शाम्भवं शुभा ।
तस्यास्तेजोऽतिववृधे शुक्लपक्षे यथा शशी ॥ ४ ॥

तां दृष्ट्वा रूपसम्पन्नां तप्तचामीकरप्रभां ।
श्रिया युक्तो जगन्नाथो मुमुदे हृष्टमानसः ॥ ५ ॥

अथ तां तादृशीं दृष्ट्वा देवा ब्रह्मादयोऽपरे ।
गन्धर्वा अमरा ये च ये च सेन्द्रा नभोगताः ॥ ६ ॥

कृताञ्जलिपुटा हर्षात्साश्रुकण्ठविलोचनाः ।
तुष्टुवुर्मुदिताः सर्वे प्रणामानतकन्धराः ॥ ७ ॥

नमामि त्वां सदागर्भामदितिं जननीं हरेः ।
चन्द्रार्काग्निप्रभागर्भां सत्त्वगर्भां धृतिं क्षमां ॥ ८ ॥

अद्वेषगर्भां संसिद्धिं वेदगर्भां स्वयं हरेः ।
देवकीं रोहिणीञ्चैव यशोदां सर्वथाभवां ॥ ९ ॥

तं वै विभर्षि गभे त्वं यो यज्ञं प्रथयिष्यति ।
कीर्तनाख्यं महापुण्यं यद्यज्ञैर्नोपपद्यते ॥ १० ॥

कीर्तनं नृहरेः श्रुत्वा निमिषार्धेन या भवेत् ।
प्रीतिरस्मादृशां सा तु कोटियज्ञैर्भवेन्न हि ॥ ११ ॥

अहो मह्यं पुरा दत्तममृतं हरिणा स्वयम् ।
समुद्रमन्थनं कृत्वा ततः कोटिगुणाधिकम् ॥ १२ ॥

रसं पश्याम एवात्र शृण्वन्तः श्रीहरेर्यशः ।
मोक्षमप्यनृतं चेतो मन्यते कीर्तनाद्धरेः ॥ १३ ॥

एवमुक्त्वा ततो देवाः सेन्द्रा जग्मुः प्रणम्य तां ।
ब्रह्माणमग्रतः कृत्वा गायन्तः श्रीहरेर्यशः ॥ १४ ॥

स्वां पुरीं श्रीपतेरंशो जातो भुव्यतिहर्षितः ।
कलेर्भाग्यं प्रशंसन्तो नृत्यन्तः प्रेमविह्वलाः ॥ १५ ॥

ततः पूर्णे निशानाथे निशीथे फाल्गुने शुभे ।
काले सर्वगुणोत्कर्षे शुद्धगन्धवहान्विते ॥ १६ ॥

मनःसु देवसाधूनां प्रसन्नेषु च शीतले ।
स्वर्नद्याः शुद्धसलिले जाते जातः स्वयं हरिः ॥ १७ ॥

तं विकाशिकमलेक्षणं लसत्पूर्णचन्द्रवदनं कनकाभम् ॥
तेजसा वितिमिरा दिशः स्वयं कारयन्तमुपलभ्य सुतं सः ॥ १८ ॥

प्रीतिसागररसस्य न पारं प्राप पद्मनिधिना यथाऽधनः ।
श्रीजगन्नाथमिश्रपुरन्दरः प्रेमगद्गद्मुखं सदा दधे ॥ १९ ॥

तस्य जन्मसमयेऽनुशशाङ्कं राहुरग्रसदलं त्रपयैव ।
कृष्णपद्मवदनेन निर्जितः प्राविशत्सुररिपोर्मुखं विधुः ॥ २० ॥

तत्र पुण्यसमये मनुजानां कीर्तनं नरहरेः कृतं जनैः ।
पूजनं सपदि जाह्नवीजले स्नानदानमघमार्जनं शुचौ ॥ २१ ॥

जहृषुः सुरगणाः समहेन्द्राः पद्मसम्भवमहेशपुरोगाः ।
अप्सरोभिरतिनृत्यपराभिर्नायकाश्च सुमनांसि ववर्षुः ॥ २२ ॥

नीलाम्बरश्चक्रवर्ती जन्मना तस्य हर्षितः ।
आजगामाश्रमं तूर्णं जामातुः सर्वशास्त्रवित् ॥ २३ ॥

जगन्नाथं समाहूय शचीं सम्बोधयन् सुधीः ।
दौहित्रजन्मकालज्ञ इदं वचनमब्रवीत् ॥ २४ ॥

अये पुरुषसिंहोऽयं जातः प्रोच्चे बृहस्पतौ ।
असौ सर्वस्य लोकस्य पाता नित्यं भविष्यति ॥ २५ ॥

सुशीलः सर्वधर्माणामाश्रयो न्यासिनां वरः ।
प्रीतिदः सर्वभूतानां पूर्णामृतकरो यथा ॥ २६ ॥

समुद्धर्ता सदैवायं पितृमातृकुलद्वयम् ।
एवमुक्ते द्विजे तस्मिन् सर्वे प्रमुदिता जनाः ॥ २७ ॥

माता हर्षमतीवाप श्रुत्वा तत् पितृभाषितम् ।
वात्स्यश्चकार पुत्रस्य जातकर्ममहोत्सवम् ॥ २८ ॥

ताम्बुलं चन्दनं माल्यं गन्धं प्रादाद्द्विजातये ।
क्रमेणोत्थानकर्मादिमङ्गलानि चकार सः ॥ २९ ॥

इति श्रीकृष्णचैतन्यचरितामृते महाकाव्ये श्रीचैतन्याविर्भावो नाम पञ्चमः सर्गः ।

# Chapter 6

# षष्ठः सर्गः

ततः कालेन कियता जानुचङ्क्रमणं शिशोः ।
दृष्ट्वा प्रहर्षमाप्तौ तौ दम्पती कलभाषिणः ॥ १ ॥

शोणपद्माभवदने द्विजराजस्य रश्मयः ।
सुस्मिते भान्ति साधूनां मनोद्ध्वान्तापहारिणः ॥ २ ॥

पुरा विभर्त्यसौ विश्वमिति चक्रे पिता स्वयम् ।
श्रीमद्विश्वम्भर इति नाम तस्य सुशोभनम् ॥ ३ ॥

तप्तकाञ्चनगौराङ्गो लसत्पद्मायतेक्षणः ।
प्रभञ्जनाम्बरो रौप्यहारी मालालको हरिः ॥ ४ ॥

राकासुधाकरमुखः कलवागमृतान्वितः ।
मधुराकृतिरामुक्तकङ्कणाङ्गदभूषणः ॥ ५ ॥

भङ्गहिङ्गुलरक्ताब्जकरपादतलः शुचिः ।
ववृधे कलया नित्यं शुक्लपक्ष इव द्युराट् ॥ ६ ॥

ततः कालेन शोणाभ्यां पादाभ्याममितद्युतिः ।
अटन् विरहजं तापं मेदिन्याः संजहार सः ॥ ७ ॥

तीर्थभ्रमणशीलस्य द्विजस्यान्नं जनार्दनः ।
भुक्त्वा तं स्मारयामास नन्दगेहकुतूहलम् ॥ ८ ॥

वयस्यैर्बालकैः सार्द्धं विहरंस्तरुपल्लवैः ।
आहताः शिशवः सर्वे विचक्रुः पुरतो मुदा ॥ ९ ॥

भुवि तिष्ठन्पदैकेन जानुनान्यस्य जानुकं ।
पस्पर्श मर्कटीं लीलां कुर्वन्मायार्भको हरिः ॥ १० ॥

एकदा धर्तुमात्मानमुद्यतां जननीं रुषा ।
वीक्ष्य कोपपरिपूर्णो भाजनानि बभञ्ज सः ॥ ११ ॥

पुरा भग्ने च भाण्डे यं यशोदा पशुरज्जुभिः ।
बबन्ध वेपिता तस्य भयाद्वीक्ष्य मुखं शची ॥ १२ ॥

उपर्युपरिविन्यस्तत्यक्तमृद्भाण्डसंहतौ ।
उपविश्याशुचौ देशे मातुरग्रे जहास सः ॥ १३ ॥

तं दृष्ट्वा सा शची प्राह त्यज तात जुगुप्सितं ।
स्थानं शुद्धं पुनः स्नात्वा ममाङ्कारोहणं कुरु ॥ १४ ॥

एवमुक्ते तु तां प्राह भगवान्सर्वतत्त्ववित् ।
दत्तात्रेयस्य भावैकपूर्णः सर्वज्ञपूरकः ॥ १५ ॥

शृणु शुचिरशुचिर्वा कल्पनामात्रमेतत्
क्षितिजलपवनाग्निव्योमवित्तं जगद्धि ।
विततविभवपूर्वाद्वैतपादाब्ज एको
हरिरिह करुणाब्धिर्भाति नान्यत्प्रतीहि ॥ १६ ॥

अतः पवित्र एवास्मि नापवित्रः कथञ्चन ।
जानीहि मातर्नान्यां त्वं शङ्कां कर्तुमिहार्हसि ॥ १७ ॥

एवमुक्ते सुते सा तं करे संगृह्य सत्वरा।
आनीय स्नापयामास स्वर्नदीस्वच्छवारिभिः॥ १८॥

अथ कतिपये काले मुक्तमृद्भाण्डसंहतौ।
उपविष्टं सुतं वीक्ष्य शची वाग्भिरताडयत्॥ १९॥

अपवित्रे निषिद्धेऽपि स्थाने त्वं मन्दधीः कथम्।
तिष्ठसीति वचः श्रुत्वा मातुः क्रोधसमन्वितः॥ २०॥

श्रीमद्विश्वम्भरः प्राह मूढे नास्त्यशुचिः क्वचित्।
उक्तं मयैतत्पूर्वं ते तत्किं मां त्वं विगर्हसि॥ २१॥

इत्युक्त्वा वदने तस्या इष्टकं प्राहिणोत् रुषा।
तदाघातेन व्यथिता मूर्च्छिता निपपात सा॥ २२॥

तदा सर्वाः समागत्य स्त्रियस्तां शीतलैर्जलैः।
सिषिचुः स्म तदा तत्र हरिर्मानुषकर्मकृत्॥ २३॥

आगत्य प्ररुरोदाशु मातर्मातरिति स्वयम्।
श्रीहस्तं तन्मुखे न्यस्य सर्वदुःखापहारकम्॥ २४॥

ततः प्रबुद्धा सा सद्यः क्रोडे कृत्वा सुतं शची।
मुमोद वत्सलातीवपुत्रस्नेहातिविह्वला॥ २५॥

ततो जगद्गुरुं प्राह काचिद्धर्षपरायणा।
परिहासपरा मात्रे नारिकेलफलद्वयम्॥ २६॥

समानीय प्रयच्छास्यै तदा सुस्था भविष्यति।
न चेन्मरिष्यति तदा किमुपायं करिष्यसि॥ २७॥

इति कस्या वचः श्रुत्वा मातुरङ्कात्त्वरान्वितः।
निर्गत्यानीय स ददौ नारिकेलफलद्वयम्॥ २८॥

तत्कालपातनादम्बुयुक्तवृन्तयुगं हरिः।
तद्दृष्ट्वा विस्मिताः प्रोचुः कुतः प्राप्तं त्वया फलम्॥ २९॥

ततो हुङ्कृतिभिः सर्वा वारयित्वा महामनाः।
वत्सगोत्रध्वजो मात्रे ददौ स्मेरमुखाम्बुजम्॥ ३०॥

अथान्यच्छृनु वीर्याणि विचित्राणि महात्मनः।
लोकोत्तराणि साधूनि मायिनः परमात्मनः॥ ३१॥

रात्रौ कदाचित्संसुप्ता शची पुर्णां जनैरिव।
पुरमालक्ष्य संविग्ना क्रोडस्थं स्वसुतं शची। ३२॥

शङ्किता प्रेययामास पतिगेहे त्वरान्विता।
पूजितं पथि देवैश्च श्रीमद्विश्वम्भरं हरिम्॥ ३३॥

पथि प्रयातस्य सुतस्य पादयोः सुरिक्तयोर्नूपुरनिस्वनं मुहुः ।
श्रुत्वा सशङ्कः किमिदं कुतः स्वनं वात्स्यः शचीं प्राह शची च वात्स्यम् ॥ ३४ ॥

गते समीपं तनयेऽतिविस्मितो दृष्ट्वा सुरिक्तं सुतपादपङ्कजम् ।
कुतः श्रुतं नूपुरमञ्जुलस्वनं सुतं समालिङ्ग्य मुदं ययौ द्विजः ॥ ३५ ॥

इति श्रीकृष्णचैतन्यचरितामृते महाकाव्ये बाल्यक्रीडायां जन्मादिलीलावर्णनं नाम षष्ठः सर्गः ।